तिरुमलतिरुपतिदेवस्थानानि

श्रीनिवासमङ्गापुरस्थ

## श्रीकल्याणवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः

**२०२३ फिब्रवरी ११ तः १९ पर्यन्तम्**

**११-०२-२०२३, मन्दवासरः**
प्रातः - तिरुच्चि उत्सवः, ध्वजारोहणम्
रात्रौ - महाशेषवाहनम्

**१२-०२-२०२३, भानुवासरः**
प्रातः - लघुशेषवाहनम्
रात्रौ - हंसवाहनम्

**१३-०२-२०२३, इन्दुवासरः**
प्रातः - सिंहवाहनम्
रात्रौ - मौक्तिकमण्टपवाहनम्

**१४-०२-२०२३, भौमवासरः**
प्रातः - कल्पवृक्षवाहनम्
रात्रौ - सर्वभूपालवाहनम्

**१५-०२-२०२३, सौम्यवासरः**
प्रातः - आन्दोलिकायां मोहिन्यवतारः
रात्रौ - गरुडवाहनम्

**१६-०२-२०२३, बृहस्पतिवासरः**
प्रातः - हनुमद्वाहनम्,
सायम् - वसन्तोत्सवः
रात्रौ - गजवाहनम्

**१७-०२-२०२३, भृगुवासरः**
प्रातः - सूर्यप्रभवाहनम्
रात्रौ - चन्द्रप्रभवाहनम्

**१८-०२-२०२३, मन्दवासरः**
प्रातः - रथोत्सवः
रात्रौ - अश्ववाहनम्

**१९-०२-२०२३, भानुवासरः**
प्रातः - पर्यङ्कोत्सवः,
तिरुच्चि उत्सवः,
तीर्थावभृतस्नानोत्सवः,
चक्रस्नानम्
रात्रौ - तिरुच्चि उत्सवः,
ध्वजावरोहणम्

तिरुमलतिरुपतिदेवस्थानानि

तिरुपतिस्थ

## श्रीकपिलेश्वरस्वामिनः ब्रह्मोत्सवः

**२०२३, फिब्रवरि ११ तः २० पर्यन्तम्**

**११-०२-२०२३, मन्दवासरः**
प्रातः - ध्वजारोहणम्
रात्रौ - हंसवाहनम्

**१२-०२-२०२३, भानुवासरः**
प्रातः - सूर्यप्रभवाहनम्
रात्रौ - चन्द्रप्रभवाहनम्

**१३-०२-२०२३, इन्दुवासरः**
प्रातः - भूतवाहनम्
रात्रौ - सिंहवानहम्

**१४-०२-२०२३, भौमवासरः**
प्रातः - मकरवाहनम्
रात्रौ - शेषवाहनम्

**१५-०२-२०२३, सौम्यवासरः**
प्रातः - तिरुच्चि उत्सवः
रात्रौ - अधिकारनन्दिवाहनम्

**१६-०२-२०२३, बृहस्पतिवासरः**
प्रातः - व्याघ्रवाहनम्
रात्रौ - गजवाहनम्,

**१७-०२-२०२३, भृगवासरः**
प्रातः - कल्पवृक्षवाहनम्
रात्रौ - अश्ववाहनम्

**१८-०२-२०२३, मन्दवासरः**
प्रातः - रथोत्सवः (भोगि तेरु)
रात्रौ - नन्दिवाहनम्, (महाशिवरात्रिः)

**१९-०२-२०२३, भानुवासरः**
प्रातः - पुरुषमृगवाहनम्
रात्रौ - (कल्याणोत्सवः) तिरुच्चि उत्सवः

**२०-०२-२०२३, इन्दुवासरः**
प्रातः - सूर्यप्रभवाहने नटराजस्वामिनः
त्रिशूलस्नानम्
रात्रौ - ध्वजावरोहणम्, रावणासुरवाहनम्

# गीतामृतम्

**श्री भगनानुवाच -**

कुतस्त्वा कश्मलमिदं विषमेसमुपस्थितम्।
आनार्यजुष्टमस्वर्ग्थमकीर्तिकरमर्जुन।।

(भगवद्गीता ०२ -१)

क्लैब्यं मास्मगमः पार्थनैतत्त्वय्युपपद्यते।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप।।

(भगवद्गीता ०३ -१)

**भावः** - श्रीकृष्ण परमात्मा अर्जुनं प्रति एवम् अवदत्। हे अर्जुन! अस्मिन् विषम समये आर्यधर्मविरुद्धः, अपकीर्तिदायकः नरकप्राप्ति हेतुः दुर्बुद्धिः कथं जातम्? नपुंसकः इव अधैर्यं मा भवतु। इदं भवन्तं समीचीनं न भवति। मनोदौर्बल्यः नीचः। तं त्यजतु। भवान् शत्रु संहारकः खलु! युद्धं प्रारम्भं कुरु।

# सङ्कीर्तनम्

सदयमानससरोजात मादृश वशं
वद मुदाहं त्वया वञ्चनीया किम् ।।सदय।।
जलधिकन्यापाङ्ग चारु विद्युल्लता-
वलयवागुरिकान्तवनकुरङ्ग
ललितभवदीक्षाविलास मनसिजबाण
कुलिशपातैरहं क्षोभणीया किम् ।।सदय।।
धरणीवधूपयोधरकनकमेदिनी
धरशिखरकेलितत्परमयूर
परमभवदीयशोभनवदनचन्द्रांशु
तरणिकिरणैरहं तापनीया किम् ।।सदय।।
चतुरवेङ्कटनाथ सम्भावयसि किम्
प्रति यथातत्प्रकारं विहाय
अतिचिरमनागत्य हन्त संतापकर
कितवकृत्त्यैरहं खेदनीया किम् ।।सदय।।

(अन्नमाचार्यसङ्कीर्तनम्)

# महाशिवरात्रिः

महाशिवरात्रिः हिन्दूनाम् अत्यन्तं विशिष्ट्यं पर्वदिनम्। इदं शिवपार्वत्योः विवाह दिनम्। अस्मिन् दिने रात्रौ शिवः ताण्डवं करोति। पति मासं शिवरात्रिं मासशिवरात्रिः इति वदन्ति। परं माघ मासे अगत शिवरात्रिं माहशिवरात्रिः इति वदन्ति। अयं महाशिवरात्रिः चान्द्रमान रीत्या पश्यामः चेत् माघमासे कृष्ण पक्षे चतुर्दश्यां तिथौ आगच्छति। माघकृष्णचतुर्दश्यां चन्द्रः शिवस्य जन्म नक्षत्रम् आर्द्र नक्षत्रेणयुक्तः भवति चेत् महाशिवरात्रिः आगच्छति। अस्मिन् दिने एव शिवः लिङ्गाकार रुपेण उद्भूतः इति शिवपुराणे कथितमस्ति।

अस्मिन् पर्वदिने बिल्वपत्राणि विशेषेण शिवाय समर्पयन्ति भक्ताः। अस्मिन् दिने भक्ताः प्रातः काले एव उत्थाय स्नादिकं कृत्वा पूजाः अभिषेचनानि अर्चनादिकं कृत्वा शिवलीलापारायणे मग्नाः भवन्ति। भारतदेशे विद्यमान सर्वेषु आलयेषु एनम् उत्सवम् अतीव वैभवोपेतेन आयोजयन्ति। आदिवसम् 'ओं' नमः शिवाय इति शिवपञ्चाक्षरीं जपन्ति भक्ताः। तपः, योगः, ध्यानं च कुर्वन्तः क्रमशः जीविनः मुक्तिपदं प्राप्तुं प्रयत्नं कुर्युः। शिवः एतेषां मार्गदर्शी।

त्रयंबकं यजामहे सुगन्धिं पुष्टिवर्धनम्।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमाऽमृतात्।।

इति महामृत्युञ्जय मन्त्रस्य अविरळ पठनेन सर्वे अपमृत्युदोषात् अपसरन्ति। नेपाल् प्रान्ते विराजमान पशुपतिनाथ आलये अस्मिन् दिने सर्वत्र भक्ताः आगत्य परमशिवं पूजयन्ति। ट्रिनिडाड्, टोबागो देशे अपि विश्वे ये ये शिवभक्ताः सन्ति ते सर्वे गत्वा महादेवं पूजयित्वा पुण्योपार्जनं कुर्वन्ति।

आभारतम् अस्मिन् दिने भक्ताः अत्यन्त भक्तिश्रद्धायां परमशिवम् अर्चयन्ति। भारतदेशे विद्यमान सर्वेषु शिवालयेषु अस्य उत्सवः आयोजयन्ति। उत्तरभारते विद्यमान वारणासी क्षेत्रे अस्मिन् दिने भक्ताः शिवं सम्पूजयन्ति। दक्षिण काशी नाम्ना प्रसिद्धः क्षेत्रः श्रीशैलेपि एतदेव दृश्यते।

श्रीशैल शिखरं दृष्ट्वा पुनर्जन्म न विद्यते इति आर्योक्तिः। शिवः ध्यान कारकः, शिवः स्थिरमनः कारकः, शिवः मोक्षकारकः च। अस्य शिवस्य दर्शनेन, ध्यानेन, पूजनेन, केवल स्मरणेन च जन्मराहित्य प्राप्तिः भवति। अतः वयं न केवलं महा शिवरात्रौ अपि च सर्वकालसर्वावस्थासु इमं भजामः। मोक्ष पद सोपानं प्राप्नुमः।

।। ॐ नमः शिवाय ।।

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*

तिरुमल-तिरुपतिदेवस्थानानां सचित्रमासपत्रिका
आध्यत्मिकसचित्रमासपत्रिका

# फिब्रवरि २०२३

सम्पुटिः-०९ सञ्चिका-११

श्रीशुभकृत्संवत्सरस्य माघशुक्लएकादशी तः
श्रीशुभकृत्संवत्सरस्य फल्गुणशुक्लनवमीपर्यन्तम् - १९४४

| | |
|---|---|
| भीष्मैकादशी | 06 |
| - श्री आर् अनन्तकृष्णशर्मा | |
| प्रस्तुतिः | 08 |
| - श्री कन्दाल लक्ष्मीनारायणः | |
| द्वादशज्योतिर्लिङ्गाः | 12 |
| - कुमारी का.विभावरी | |
| शिववें भवम् | 15 |
| - डा.वै.नागेन्द्रम्मा | |
| कृपणस्य धनम् | 18 |
| - श्रीमति विजय भट्ट | |
| मार्कण्डेय | 19 |
| - का.भास्करः | |
| बालविनोदिनी | 21 |

गौरवसम्पादकः-
श्री ए.वी.धर्मरेड्डि I.D.E.S.,
कार्यनिर्वहणाधिकारी (F.A.C.), ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी,
ति.ति.दे.मुद्रणालयः,
तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः,
ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.

**मुखचित्रम्** – श्रीकल्याणवेङ्कटेश्वरस्वामिनः, श्रीनिवासमङ्गापुरम्
**अन्तिमरक्षापुटः** – श्रीकामाक्षीसमेत श्रीकपिलेश्वरस्वामिनः, कपिलतीर्थतम्।

**सङ्केतः**
प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org

एका पत्रिका : रू.२०/-
वार्षिकग्राहकत्वम् रू.२४०/-
आजीविक ग्राहकत्वम् रू.२४००/-

# भीष्मैकादशी

- श्री आर् अनन्तकृष्णशर्मा, चरवाणी - ८९७८५८७७५१

**मा**घशुक्ल एकादशीं भीष्म एकादशी इति कथ्यते। श्रीविष्णुंसहस्रनामस्तोत्रं भीष्मपितामहः पाण्डवानां उक्त महोपदेशम्। महाभारत सङ्ग्रामानन्तरं भीष्म पितामहः अम्पशय्यायाम् आसीत्। अन्ये स्वीय राज्यानां प्रति गतवन्तः एकः मासः परिसमाप्तः। एकदा श्रीकृष्णः पाण्डवानां साकम् उपविश्य वार्तालापं करोति स्म। तन्मध्ये किञ्चित् कालं श्रीकृष्णः तूष्णीं स्थितवान्। तदा श्रीकृष्णः तूष्णीं स्थितवान्। तदा अन्ये श्रीकृष्णं प्रति किमभवत् इति पृष्टवन्तः। तदा श्रीकृष्णः एवम् उक्तवान्। मां ध्यायन्ति भगवान् भीष्मः। कुरुक्षेत्रे अम्पशय्योपरि निद्रायमान भीष्मः मां स्मरन्तः अस्ति। मम मनः तत्रैव गतः। हे पाण्डवाः! उत्तिष्ठत। सर्वे कुरुक्षेत्रं प्रति गच्छामः। किमर्थम् इत्युक्ते भीष्मः न केवलं वैष्णवोत्तमः अपि च महान् तत्वज्ञश्च। लोके विद्यमान समस्त धर्मान् अवगत महान् धार्मिकोत्तमः। धर्मशास्त्र विषये यं कमपि संशयमपि कालानुरीत्या वैदिकीपद्धत्या स्पष्टीकर्तुम् अयमेव शक्नोति। इदानीं तादृश धार्मिकाग्रेसरस्य निर्गमसमयः आसन्नोभूत्। यदि अयम् अस्तमते धर्मनन्दन! भवतः मनसि विद्यमान अनेक धार्मिक संशयान् कोपि समाधानयितुं शक्नोति। तदर्थं झटिति गच्छामः इति सर्वान् तत्र आनयति।

अम्पशय्योपरि पतित भीष्णः रमारमे सार्ध एकमासम् अभवत्। मासस्तु माघमासः। प्रातःकाले तीव्रम् आतपं, रात्रौ अतीव शैत्यम्। एवं स्थिते पकृतेः केवलं वायु भक्षणं कृत्वा कदा उत्तरायणपुण्यकालमागमिष्यतीति निरीक्षमाणोस्ति। एवं स्थितं भीष्मं दृष्ट्वा सर्वे रुदन्तः आसन्। मनस्थित वैकुण्ठवासं स्वीये समीपे दृष्ट्वा अत्यन्तानन्देन अश्रुपूर्णितेन नयने श्रीकृष्णं प्राञ्जलिं कृत्वा स्थितवान्। तदा श्री कृष्णः "हे पितामह! भवान् सर्वज्ञः, धर्मज्ञश्च। भवदनुमोदित धर्मसूक्ष्मान् राजनीतिशास्त्रञ्च युधिष्टिरं प्रति बोधय"। भीष्मः "हे कृष्ण, परमात्म! सर्वज्ञस्तु भवानेव। भवानेव तस्मै सर्वं बोधयितुं शक्नोति खलु"? इति उक्तवान्। तदा कृष्णः

## कोरोना केकारवः तस्मात् जाग्रत

१. समये आहारं स्वीकुर्वन्तु, उदरं रिक्तं मा स्थापयन्तु।
२. प्रतिदिनम् एकहोरात्मकं सूर्यरश्मीः आस्वादयन्तु।
३. उष्णजलं पिबन्तु, कण्ठम्, आर्द्रं स्थापयन्तु।
४. रात्रौ हरिद्रामिश्रितं दुग्धं पिबन्तु।
५. वायुनियन्त्रकयन्त्राणाम् उपयोगं मा कुर्वन्तु।
६. मुखावरकं नित्यं धारयन्तु, समये परिवर्तयन्तु च।
७. नियमितरूपेण हस्तौ प्रक्षालयन्तु।
८. स्पर्शरहितं व्यवहारं सम्पादयन्तु।

"अहं वेदित तत्वः, भवान् तत्वज्ञः तदर्थं भवानेव वदतु। तत्वज्ञस्य वचनमेव प्रामाणिकमिति श्रुतिः"। तदा भीष्मः स्वकीयबुद्धौ विद्यमान सर्वान् धर्मान् तदंशश्च कालानुरीत्या बोधयामास। सर्वे भीष्मस्य धर्म प्रवचनानि श्रुत्वा प्रमोदितवन्तः। द्रौपदी हसन्मुखा अभवत्। तां दृष्ट्वा भीष्मः हे कृष्णे! भवती किमर्थं हसन्मुखा अभवत् इति अहं जाने। यदा कुरुसभायां भवतीम् अपमानिता तदा सर्वे तूष्णीम् अतिष्ठन्। तन्मध्ये अहमपि एकः। तदा अहं दुर्योधनस्य अन्नपानादिकं खादित्वा मलिनः अभवम्। इदानीं तत्सर्वं पार्थ निस्सर्गात् अम्पात् सर्वमपि निर्गतो भूत्। अन्यद् भगवतः श्रीकृष्णस्य सहस्रनाम मन्त्र जपेन पुनीतः अभवम्। तदर्थमेव इदानीं श्री कृष्णस्य अनुग्रहेण प्रचोदनेन च स्वीय बुद्धौ स्थित धर्मान् बोधयितोस्मि। ततः परं धर्मराजं प्रति विष्णुसहस्रनामानि उद्धोषितवान्। तदारभ्य अस्मिन् एतावत् पर्यन्तं माघशुद्ध एकादशीं भीष्मएकादशी अथवा विष्णुसहस्रनाम जयन्ति इत्यपि कथ्यते।

महाभारते भीष्मस्य वैशिष्टयं स्थानं वर्तते। सौशील्येवा, शौर्येवा, सत् प्रवर्तनेवा, नियमेवा, निष्ठेवा भीष्मस्य समानः अन्यो नास्ति। बाल्यादेव अयं महान् त्याग पुरुषः। पित्रे स्वसौख्यं, राज्याधिकारं सर्वमपि तृणप्रायेण त्यक्तवान्। भीष्मः न केवलं राज्यत्यागः अपि च आजन्म ब्रह्मचर्यव्रतमपि आचरितवान्। भीष्मः श्रीकृष्णं कदापि सामान्य नररूपेण न चिन्तयामास। परं साक्षात् पुरुषोत्तमः श्रीमन्नारायणः इत्येव विचिन्त्य सर्वकाल सर्वावस्थासु अत्यन्त भक्ति श्रद्देन पूजयामास। महाभारते शान्ति अनुशासनिक पर्वणि भीष्मस्य वैज्ञानिकी दृष्टेः दर्पणानि। तत्र भीष्मः समस्त विज्ञानसारं धर्मराजं प्रति बोधितवान्। अनन्तरकाले राज्यपालनं करिष्यमाण धर्मराजम् उद्दिश्य राजनीति अंशान् बोधितवान्। धर्मराजस्य प्रश्नानां समाधानमेव श्री विष्णुसहस्रनामस्य पूर्वपीठिका।

अयं च भीष्मः मागशुद्ध अष्टम्यां वैकुण्ठप्राप्तिं प्राप्तवान्। ततः परम् आगामिनीम् एकादशीं भीष्मएकादशी अथवा महाफलएकादशी अथवा जयएकादशी इत्यपि कथयन्ति। विष्णुसहस्रनाम पठनेन सकलसन्मङ्गळावाप्तिः भविष्यति। आभारतं सर्वेरपि भीष्माष्ठम्यां दिने अवश्यं भीष्मतर्पणम् आचरणीयम्। तेन भगवतः श्रीकृष्णस्य विशेषानुग्रहम् अवश्यं प्राप्नुवन्ति इति आर्योक्तिः।

## डिसेम्बर्- २०२२

### लघुप्रश्नोत्तरी

### समाधानानि

१. गङ्गा शन्तनयोः
२. कुन्ती माद्री च
३. नकुलसहदेवौ
४. शन्तनः
५. नैमिशारण्ये
६. उग्रश्रवणः
७. वर्षत्रयम्
८. उपरिचरवसुः
९. कुरुवंशीयः
१०. इल महाराजः
११. कृपी
१२. अर्जुनः
१३. कानीनः
१४. किन्दमः
१५. शुक्राचार्यः

# प्रस्तुतिः

- कन्दाल लक्ष्मीनारायणः
चरवाणी - ९९८५२३७३५३

जयतु जयतु वेदैर्वेद्य दिव्यस्वरूपो
जयतु जयतु ब्रह्मेशानदेवाधिपेड्यः।
जयतु जयतु देव स्सान्द्रकारुण्यसिन्धुः
जयतु जयतु पद्मावल्लभो वेङ्कटेशः।।

श्रियःपतिः निखिल जगदेक कारणम् अनन्तकल्याण गुणात्मकस्सर्वेश्वरो भगवान् नारायणः प्रलयसमये स्वान्तर्निलीनान् दुस्तरात् अपारात् संसारसागरात् उत्तर्तुं तथाऽचित्प्रायतया स्वयं भ्रमितुमप्यशक्तान् जीवगणान् वीक्ष्य व्यसनेषु मनुष्याणां भृशं भवति दुःखितः श्रीरामः - इत्युक्तरीत्या निरुपाधिककृपापरवशस्सन् तान् उज्जीवयितुम् उत्प्रेक्षते स्म।समनन्तरमेव परमोदारः पुरुषोत्तमोऽचिदविशेषितेभ्यो निजकर्मसंस्कारवशात् सङ्कुचितज्ञानगुणकेभ्य स्तेभ्य श्चेतनेभ्यस्स्वस्यैव करुणया केवलं, कलेबरं चक्षुरादीनि करणानि च प्रत्येकम् अनुगृह्णाति। ततश्च तमोमये संसारे सदसती विवेक्तुं तेभ्यः प्रदीपमिवयोज्ञानमपि प्रदिशति। अन्तर्यामिरूपेण तेषां हृदयगुहावस्थितस्य स्वस्य स्वरूपमपि योगाभ्यासवशेनावगन्तुमवकाशमपि प्रयच्छति। तथापि प्रापञ्चिक विषयाकृष्टान् भवाग्नौ पततः शलभानिवतस्थितान् अतत्त्वप्रेप्सून् तान् कथङ्कारमपि स्वयमुद्दिधीर्षुः स्वीयां सन्निधिं

प्रापयितुमनाः विविधं प्रयतते। अजोऽपि सन् अव्ययात्मा जनार्दनोऽनिर्विण्णो बहुधा विजायते।

अथ च यान् अनुजिघृक्षते स्वयं तज्जातीय स्तादृशस्तत्स्वभावः तन्मध्यागतस्तेभ्य स्वस्वरूपं रामकृष्णादि विभवरूपेण विवृणुते। तथापि तादृश विभवमूर्तयः प्रवाहप्रायाः तत्तत्कालावस्थितानामेव आशिश्रयिषूणां सुप्रापा इति कृत्वा, सर्वसुलभोऽर्चकपराधीन उभयविभूतिनायकस्स भगवान् जनास्सर्वे नित्य मनियतं च निजसेवां यथा लभेरन् तथा स्वस्य सौलभ्य स्वामित्व वात्सल्यादीन् आश्रयणसौकर्यापादकान् कल्याणगुणान् प्रकाशयन् लीलाविभूत्यां श्रीरङ्ग श्रीवेङ्कटाद्रि काञ्चीपुर यादवाद्रिप्रभृतिषु दिव्यक्षेत्रेषु भुवनमोहनेन दिव्यमङ्गलविग्रहेण अर्चारूपे विलसन् विश्वं पालयति। एष्वन्यतमे पुष्पमण्डप इति प्रसिद्धे वेङ्कटाचलक्षेत्रेऽधिवसन् देवदेव - श्रीनिवासः वेङ्कटेश इत्यादि दिव्यनामभिस्सङ्कीर्त्यते भक्तैः। आर्तो जिज्ञासुरर्थार्थी ज्ञानी च'' इत्युक्ता श्चतुर्विधा अपि भक्तजना श्चात्यन्तं तं प्रीत्या भजन्तोऽभीप्सितानि ऐहिकान्यामुष्मिकानि च फलानि लभन्ते। न चैतावदेव नित्यविभूत्याख्ये परमपदे परमपुरुषं श्रीवासुदेवं सदा पश्यन्तोऽनन्तगरुड विष्वक्सेनप्रमुखा नित्यसूरयश्च सदेवर्षिगणा अत्रागत्य वेङ्कटाचलेऽर्चारूपेण विहरन्तं सप्रश्रयं सेवन्ते।

वेङ्कटाचल एव गरुडाचल, नारायणाद्रि, वृषभाद्रि, वृषाद्रिमुख्यैः नामभिराख्यायते। शेषाद्रि रित्यपि अपरं शुभनाम। आदिशेषः कदाचित् भगवता-मद्विहारार्थं भूमौ पर्वताकृतिं धृत्वा तिष्ठ-इत्यादिष्टः। स च नारदमहर्षेः सूचनया अत्र पर्वताकारो भूत्वा ''निवासशय्यासन'' इत्याद्युक्तरीत्या तन्निवासस्य स्थानमभूत्। अतोऽस्य शेषाचल इत्यापिसार्थकं नाम।

अत्रावतीर्णस्य शुभाश्रयस्य गोविन्दस्य स्वरूपवैभवं गुणवैभवं च श्रुतिस्सेतिहासपुराणा प्रस्तौति। तामनुसृत्य तत्त्वविद्भिः महर्षिभिस्तोष्टूय्यमानो वेङ्कटाचलाधीशो विजयते तमाम्। निरुपाधिक भगवदनुग्रह लब्धदिव्यज्ञानसम्पन्नाः तद्गुणानुभवपरिप्लुतस्वान्ता पराङ्कुश (नम्माल्वार्) परकाल (तिरुमङ्गैयाल्वार्) प्रभृतयो दिव्यसूरयश्च निरतिशयं भगवन्महिमानं तस्य लीलाचेष्टितजातं, कल्याणगुणसमृद्धिं च सम्यगनुभवन्त स्समचिकीर्तन् सूक्तिसहस्रै श्रीनिवासम्। काले काले च महान्तो धीमन्तः कवयो भक्तिनिर्भरा बहवो वेङ्कटालभर्तुर्वैभवम् अभीष्टप्रदत्वं च समस्तुवन्। जगदाचार्या भगवद्रामानुजमुनयो भगवतस्सर्व जगत्कारणत्वं, विनतजनरक्षणदीक्षितत्वं च प्रस्तुत्य परस्मिन् ब्रह्मणि श्रीनिवासे भक्तिरूपापन्नां शेमुषीं प्रार्थयामासुः। श्रीवेङ्कटेशघण्टानततारतया विदिताः वेदान्तदशकमहाभागाः दयाशतकनाम्नास्तोत्रेण स्वामिनो निरुपमं दयागुणं प्रास्तुवत। शेषाद्रिशेखरविभौ निरुपमभक्तिपरिपूर्णोः श्रीमन्तः प्रतिवादिभयङ्करम् अण्णन् महाभागाः प्रातस्स्मरणीयाः। वेङ्कटनायकस्य स्तुतिषु प्रथमगण्य एतत्कर्तृकः सुप्रभात स्तोत्र प्रपत्ति मङ्गलाशासन स्तोत्र समुदायः स्वामिनस्सन्निधौ नित्यं प्रातरनुसन्धीयते। लोके सर्वत्र भक्तजनैः प्रीत्या सङ्गीर्यते चेति किमु वक्तव्या तस्य महिष्ठता।

क्रमे चास्मिन् अस्मदाचार्य चरणैः ''महामहोपाध्यायः'' कविशाब्दिक केसरी'' शास्त्ररत्नाकरः इत्यादि बहुबिरुद भूषितैः श्रीमद्भिः डा।।श्रीरङ्गम् नल्लान् चक्रवर्तुल रघुनाथाचार्यमहोदयैस्सङ्ग्रथित श्शेषाद्रिश स्तुतिनामा पद्यकदम्बः पद्मावतीजानेः पदकमलसन्निधौ भक्त्या समर्पितः।

**कण्ठो वृषाद्रिरमणस्य परिष्कृतस्स्यात्।**
**मत्प्रत्त भक्तिसुरभिस्तुतिमालिकाभिः।। (४७)**

इति निजकृतेः श्रीनिवासकण्ठलङ्कृतित्व माकाङ्क्षितवन्त एते भक्तकवयः। महाभगा इमे भक्तिप्रभाव भवदद्भुत भावबन्ध सन्धुक्षित भगवत्प्रावण्यवन्त इति वेदार्थरत्ननिधिरिति च स्तोत्रानुसन्धानेनैव सुविशदं ज्ञायतेऽध्येतृभिः।

स्तुतिरत्ने ह्यस्मिन् सात्त्विकी भक्ति भावना भगवत्प्राप्तौ सुमहती आर्ति स्सुविस्तरं प्रकाशिता। स्वस्याज्ञानान्धकारं प्रणुद्य कल्पतस्तुरिवस्वामी मोक्षाख्यं पुमर्थं ददातु इति तैः प्रार्थितम्। स्वस्य मतिः आदेहपातं शेषाद्रिशे एव सक्ता भवत्विति आकाङ्क्षितम्। क्षितितलाधिपत्यात् अथवा अमरेन्द्रपदाच्च शेषशैल दिव्य सरस्सु मत्स्यजन्मैव भाग्यदायि भवतीति अभिलषितं तत्। अतिभयङ्कर संसार

वार्धेः उत्तर्तुं श्रीहरिपाद भक्तिरेव निश्रेणिका भवतीत्यध्यवसायं प्राप्य'' शरणं व्रजामि चरणद्वय''मिति प्रपत्तिः कृता। अकिञ्चनस्यापि मम श्रीरामानुजपाद भक्ति रेव त्वामुपसर्पितुं योग्यतां कल्पयतीति आत्यन्तिकी गुरु भक्तिः प्रदर्शिता। श्रीभूसमेतो भगवान् खगेन्द्र मारुह्य आत्मानं त्रातुं कदाऽऽयास्यतीति परगतस्वीकाररूपायां तत्प्राप्ता वभिनिवेशः प्रकटितः। भगवति तद्भक्तेषु च निरन्तरम् अनेकान् असंहान् अपचारान् कुर्वन्नहं नरकार्हो भवामीति व्याकुलता चानुभूता।

तथायात्त लोकोत्तरसुन्दरस्य नीलोज्ज्वलवपुषो देवादिदेवस्य पादादि केशान्त सौन्दर्यं च रमणीयतया अभिवर्णितम्। यथा श्रीपादस्तुतौ -

**वन्दमानामरव्रातमौलिस्फुरत् पद्मरागप्रभाराजि नीराजितम्।**
**अस्तु भद्रप्रदं शेषशैलप्रभोः पद्मगर्भारुणं पादयुग्मं मयि।।२८**

प्रणमतां देवबृन्दानां किरीटेषु प्रकाशमाननां पद्मरागमणीनां कान्तिभिः कल्पितनीराजनं कमलान्तर्भागमिव अरुणवर्ण भासमान शेषाचलपतेः वेङ्कटेश्वरस्य श्रीपादद्वन्द्वं मम मङ्गलदायि भवतु इत्यर्थः।

ततः परं श्लोकविंशत्या भगवतो दशावतारवैभवञ्च प्रणुनुवे। निशाचरेण वेदानामपहरणात् विधातरि व्यधितचित्ते मत्स्यरूपी परमात्मा दैत्यं निहत्य वेधसे वेद मनुगृह्य तस्य स्वान्ते शान्तिमकल्पयत्। एवम् अन्येष्ववतारेषु स्वाश्रितानां बहूपकृतवान् भगवान्। कपट वटु वेषधारी उपेन्द्रो वक्षस्स्थलस्थितां लक्ष्मीं मृगचर्मणा पिधाय आयुधवर्गस्य दण्डरूपतां प्रणीय बलिमखे भिक्षापेक्षया याचकत्व मवलम्बितम्। अहो! कीदृशः स्वामिनः प्रयास आश्रिताभीष्टप्रपूरणे। श्रीरामावतारवैभववर्णन सन्दर्भे कवनकौशलं पश्यामः -

**निषङ्गादुद्धर्तुं धनुषि शरमाधातु मथ तं**
**विमोक्तुं वा कालस्त्रुटिरपि न मध्ये भवति ते।**
**इतीमां साश्चर्यं निशिचरणपति स्ते निपुणतां**
**मुहुः पश्यन् मोहात् चलति करचापं विसृजति।।**

-भगवन्! लङ्कायां रावणेन सह योधनसमये तव क्षणकाले एव शरस्थ शरघेऽद्धरणम् धनुष्याधानं विमोचनं च अव्यवधानेन सञ्जातम्। तदा विक्रमैरञ्जयितुर्भवत एतादृशं रणकौशलं सविस्मयं पश्यन् दशकण्ठ स्ससम्भ्रमं कम्पते स्म शरासनं च करात् अत्यजत् इत्यर्थः।

अथ च पुन विंशतिभिरश्लोकैः श्रीशठकोपसूरिभिः श्रीमद्वेङ्कटाचलपति विषये तिरुवाय्मोळि दिव्यप्रबन्धे द्राविड भाषायां ''ओळिविल् काल मेल्लाम् उलग मुण्ड पेरुवाय'' इति दशकद्वयेन यन्मङ्गलमाचरितं, तावान् द्विव्योऽनुभवस्सुमधुर मनूदित आसीत्।

तदुपरि स्तुतिकर्त्रा - स्वस्य अज्ञत्वम् दोषभाक्त्वम् कर्मबद्धत्वम् इन्द्रियवशत्वं भौतिकसुखाभिलाषित्वं च विनिवेद्य आत्मनैच्यं न्यरूपि। यदि च भगवान् अपराधिनं धर्मदूरं मां पर्यत्यक्ष्यत् तथापि रामानुजपसम्बन्धज्ञानमेव उज्जीवनस्य चरमोपाय इति अध्यवसायविज्ञापनेन स्तुतिरियं सुसम्पन्ना सञ्जाता।

मधुरगम्भीरशैली विलसितेऽयं स्तोत्र मालिका क्वचित् सुप्रसन्ना विनिर्मलतीर्थवत् पाठकान् अवगाहयति। क्वचिच्च सुप्रौढ कल्पनामयी पुरः पदोपसर्पणे आलोचयति। कविशाद्विक केसरिणां कृतावस्यां उपमाद्यलङ्कारवैभवः वर्णनवैदुष्यं व्यङ्ग्यार्थ रमणीयता च हर्ष मावहति।

चिचीषामि चक्रे (कर्मणि लिट्) उत्तस्युषः, भृङ्गीयतु, राजहंसीयतु, विपुनचन्द्रेशालायते इत्यादि विलक्षणप्रयोगास्सुधियां मनस्सु मोद मावर्जयन्ति। अष्टोत्तरशत श्लोकात्मकेऽस्मिन् स्तोत्रे विविधच्छन्दोवृत्त घटिताः श्लोकाः प्राबध्यन्त। अतिप्रसिद्धैः रथोद्धत शार्दूलविक्रीडिता, वसन्ततिलका, मन्दाक्रान्ता, इन्द्रवज्रा, उपेन्द्रवज्रा, स्रग्धरा, शिखरिणी प्रभृतिभिस्साकं स्वीकृतानि अनतिप्रसिद्धानि शालिनी, हरिणी, महामालिका, नर्कुट, मञ्जुभाषिणी, प्रमिताक्षरा प्रमुखाणि वृत्तानि विद्वद्वरेण्यानाम् एतेषां कवन नैपुण्यमभिव्यञ्जयन्ति। ''शरणीकृताहि धरणीधरस्य (१९) इत्यादिश्लोको मणिमालाख्य वृत्ते निबद्धः। युग्मद्वयमप्यत्र रमणीयता मातनोति।

(अनुवर्तिष्यते)

1. तिरुमल क्षेत्रे ०२.०१.२०२३ दिनाङ्के श्रीवेङ्कटेश्वरस्वामिनः वैकुण्ठद्वारदर्शनार्थम् आगत भक्ताः।

2. ०२.०१.२०२३ दिनाङ्के वैकुण्ठएकादशीं पुरस्कृत्य विविधप्रकार पुष्पालङ्करणे श्री पद्मावतीसमेतवेङ्कटेश्वरः।

3. ०२.०१.२०२३ दिनाङ्के वैकुण्ठएकादशी सन्दर्भे तिरुवीथ्यां स्वर्णरथोत्सव दृश्यम्।

4. ०३.०१.२०२३ दिनाङ्के श्रीस्वामि पुष्करिणीतीर्थमुक्कोटि सन्दर्भे चक्रत्ताळ्वार् पूजकैङ्कर्य चित्रम्।

# द्वादशज्योतिर्लिङ्गानि

- का.विभावरी

## १.सोमनाथ लिङ्गेश्वरस्वामी

चन्द्रः सौराष्ट्रे स्थित प्रभासतीर्थ समीपे पार्थिवलिङ्गं प्रतिष्ठित्वा मृत्युञ्जयमहामन्त्रं जपित्वा क्षयव्याधिविमुक्तः अभवत्। चन्द्रस्य प्रार्थनेनैव अत्र सोमनाथलिङ्गः आविर्भूतः।

## २.श्रीशैलमल्लिकार्जुन लिङ्गेश्वर स्वामी

चन्द्रवती नाम कन्या श्रीशैलेस्थित ज्योतिर्लिङ्गस्य मल्लिमालासमर्पणम् अकरोत्। तथा स्वामी शाश्वतया तथैव भवति इति वरमदात्। तथा स्वामी श्रीशैलमल्लिकार्जुन ज्योतिर्लिङ्गरूपेण आविर्भूतः।

## ३.महाकाळ लिङ्गेश्वरस्वामी

वेदप्रियः नाम भक्तः अवन्तिका पत्तने दूषणः नाम राक्षसात् रक्षणार्थं स्वगृहे एव पार्थिवलिङ्गं प्रतिष्ठित्वा प्रार्थितवान्। स्वामी प्रत्यक्षो भूत्वा तस्य प्रार्थनेन तत्रैव महाकाळेश्वर ज्योतिर्लिङ्गरूपेण आविर्भूतः।

## ४.ओंकारलिङ्गेश्वर स्वामी

पर्वतराजः विन्ध्यः तस्य शिखरोपरि ओंकार यन्त्रं, तन्मध्ये पार्थिवलिङ्गं प्रतिष्ठित्वा प्रार्थयामास। तदा शिवः प्रत्यक्षोभूत्वा तत्रैव ओंकारेश्वरज्योतिर्लिङ्गरूपेण आविर्भूतः।

## ५.वैद्यनाथलिङ्गेश्वर स्वामी

रावणासुरः स्वस्य मातुः लिङ्गपूजनार्थं कैलासं गत्वा शिवं प्रार्थित्वा शिवस्य आत्मलिङ्गम् आनीय प्रतिष्ठितवान्।मानवानां दीर्घव्याधि निवारणार्थं अत्र वैद्यनाथज्योतिर्लिङ्गरूपेण आविर्भूतः।

## ६.भीमशङ्करलिङ्गेश्वरस्वामी

सह्याद्रि पर्वतेषु कर्कटिविराधः नाम राक्षसयोः पुत्रः भीमः। तस्मात् रक्षणात् सुदक्षिणः नाम राजा पार्थिवलिङ्गं प्रतिष्ठित्वा प्रार्थयति शिवम्। स्वामी प्रत्यक्षोभूय भीमं निहत्य भीमेश्वरज्योतिर्लिङ्गरूपेण आविर्भूतः।

कोटिसूर्यप्रकाश शिवलिङ्गं ज्योतिस्वरूपस्य महाशिवस्यैव रूपः। परमशिवस्य आराध्यचिह्नं 'लिङ्गः'। दृश्यमान जगत्सर्वमपिलिङ्गे एव विद्यमानो वर्तते। लिङ्गमूले ब्रह्मा, मध्येविष्णुः, उपरि भागे ॐकार स्वरूपी रुद्रः सदाशिवः वर्तन्ते। 'अ' कार, 'उ'कार, 'म्' कारणाम् एकरूपमेव ओङ्कारः तदेव लिङ्गम्। तदेव त्रिमूर्तीनां मेकरूपम्।

## ७.रामलिङ्गेश्वरस्वामी

श्रीरामः रावणसंहारानन्तरं ब्रह्महत्यादोषनिवारणार्थम् एनं लिङ्गं प्रतिष्ठितवान्। तदेव रामलिङ्गश्वर ज्योतिर्लिङ्गरूपेण आविर्भूतः।

## ८.नागलिङ्गेश्वरस्वामी

दारुकः दारुका नाम राक्षस दम्पत्योः हननार्थं सुप्रियः कारागृहे स्थित सर्वैः सह शिवनाम सङ्कीर्तनं कारयति। तदा एकः नाग सर्पः आगत्य राक्षसौ संहस्तिवान्। तस्य भक्तस्य इच्छया सर्पः स्वस्य शिरोपरि स्थित मणिरेव नागेश्वरज्योतिर्लिङ्गरूपेण आविर्भूतः।

## ९.काशीविश्वेश्वरलिङ्गेश्वरस्वामी

ब्रह्मविष्णू शिवं काशीपत्तने एव शाश्वतवासं कृत्वा सृष्टिम् अनुगृह्णन्तु इति प्रार्थितवन्तौ। तदा शिवः विश्वेश्वरज्योतिर्लिङ्गरूपेण आविर्भूतः।

## १०.त्र्यम्बकलिङ्गेश्वरस्वामी

ब्रह्मगिरौ तपः आचरित गौतमः गवां मरणस्य दुःखम् अनुभूय तपः आचरितवान्। तदा शिवः त्र्यम्बकेश्वरज्योतिर्लिङ्गरूपेण आविर्भूतः।

## ११.केदारलिङ्गेश्वरस्वामी

बदरिकावने नरनारायण महर्षीः केदार क्षेत्रे पार्थिव लिङ्ग प्रतिष्ठापनं कृत्वा शिवं सम्पूजयतौ। तयोः प्रार्थनेन शिवः केदारेश्वर ज्योतिर्लिङ्गरूपेण आविर्भूतः।

## १२.घ्रुष्णलिङ्गेश्वरस्वामी

वेदगिरिः इति ग्रामे निवसित भक्तायाः सद्बुद्धेः सत्प्रवर्तनस्य च सन्तुष्टः शिवः तस्याः नाम्ना एव घ्रुष्णेश्वरज्योतिर्लिङ्गरूपेण आविर्भूतः।

०२.०१.२०२३ दिनाङ्के वैकुण्ठएकादशी पर्वदिनं पुरस्कृत्य तिरुमलआलये २७.१२.२०२२ दिनाङ्के वैभवेन आयोजित कोयिल्आळ्वार्तिरुमञ्जनमहोत्सवः। अस्मिन् कार्यक्रमे ति.ति.दे. कार्यनिर्वहणाधिकारिणः श्री अनील् कुमार् सिंघाल्, ऐ,ए.एस् महोदयः अपि च अतिरिक्त कार्यनिर्वहणाधिकारिणः (एफ्.ए.सि) श्री वीरब्रह्मम्, ऐ.ए.एस्., महोदयः।

२२.१२.२०२२ तः १५.०१.२०२३ पर्यन्तं तिरुमलक्षेत्रे आयोजित श्री वेङ्कटेश्वर अध्ययनोत्सव कार्यक्रम दृश्यम्।

०२.०१.२०२३ दिनाङ्के तिरुमल क्षेत्रे वैकुण्ठ एकादशी सन्दर्भे वैकुण्ठद्वार दर्शनार्थम् आगत भक्ताः।

वै.एस्.आर्.मण्डलम् प्रोद्दुटूरु मुनिसिपल् उन्नत पाठशाला प्राङ्गणे ति.ति.दे. आध्वर्ये १८.१२.२०२२ दिनाङ्के आयोजित श्री श्रीनिवास कळ्याणमहोत्सव दृश्यानि।

१८.१२.२०२२ दिनाङ्के तिरुमल आलये आयोजित विश्वशान्ति महायज्ञ कार्यक्रम दृश्यानि। अस्मिन् कार्यक्रमे ति.ति.दे. पालकमण्डलि अध्यक्षः श्री वै.वि.सुब्बारेड्डि दम्पत्यौ भागं गृहीतवन्तौ।

# शिववैभवम्

डा- वै.नागेन्द्रम्मा
चरवाणी - ८९१९५३८०४०

परमेश्वरमुद्दिश्य कथनं, श्रवणं सर्वमपि परमेश्वराराधनमेव।

असितगिरिसमं स्यात् कज्जलं सिन्धुपात्रे
सुरतरुवरशाखा लेखनी पत्रमुर्वी।
लिखति यदि गृहीत्वा शारदा सर्वकाले
तदपि तव गुणानामीश पारं न याति॥

सरस्वती परमेश्वरं वर्णयितुं कज्जलगिरिं समुद्रे मिलित्वा मशीं कृतवती, तत्र लेखनी तु कल्पवृक्षशाखा, पत्रं तु भूमिरेव, लेखनकार्यं तु सर्वदा प्रचलति। अथापि सा देवी परमेश्वरगुणान् वर्णयितुं न शक्ता इति। अतः परमेश्वरः अनन्तः, तस्य महिमा अनन्ता। तादृशपरमेश्वरमाराध्य मुक्तिं गच्छामः। एवमेव -

शिवेति द्वौ वर्णौ परपदनयध्वंसगतौ। घरट्टग्रावाणौ भवविटपि बीजौघ दलने शिवेत्यक्षरद्वयमेवाप्यन्तं शक्तिपूर्णम्। अपि च घरट्टग्रावाणौ इत्यत्र अस्माकं कर्मबीजानि चूर्णं करोति नाम जन्मराहित्यं प्राप्तुं शक्यमिति ज्ञायते। जन्मनि दुःखं भवत्यतः सर्वेऽपि जन्मराहित्यमिच्छन्ति। एतादृशेच्छा सर्वेषां भवति परन्तु अर्हता केषाञ्चनैव। शिव इति यः वदति सः मुक्तिं गच्छतीति त्यागराजोऽपि गीतं गायति। हंसः यथा पक्षसाहाय्येन आकाशं गच्छति तथा शिव इति पक्षसाहाय्येन परमं पदं प्राप्तुं शक्यमिति ज्ञायते।

सृष्टेः पूर्वमेव परमेश्वरः अस्ति। अमुं विषयं नासदीयसूक्तमेवं वर्णयति ''यदा तमः.... शिव एव केवलः। सृष्टेः पूर्वं न प्रकाशः न वान्धकारः, न च दिवारात्रम्, कार्यकारणञ्च। परन्तु किमपि नास्तीति वक्तुं न शक्यते। यतो हि शिवः अस्ति। परमेश्वरस्य सृष्टिः करणीयेति सङ्कल्पः जातः। सङ्कल्पसमनन्तरमेवास्माकं सङ्कल्पः न फलति, परन्तु परमेश्वरस्य सङ्कल्पद्वारा इच्छा, ज्ञान, क्रियाशक्तित्रयमागतम्। शक्तित्रयमेव शिवः। यथा ज्योत्याः कान्तिं, सूर्यात् प्रकाशं, शर्करायाः माधुर्यं पृथक्करणं कष्टम्। तथैव परमेश्वरात् शक्तिमपि। शक्तिरेव पराशक्तिः सैव माता, एषा शक्तिः कस्य? स एव पिता तौ मातापितरौ,

एतदेवार्थं आदिशङ्कराचार्या सौन्दर्यलहर्यां एवं वर्णयति -

**शिवशक्त्यायुक्तो यदि भवति शक्तः प्रभवितुं**
**न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि।**
**अतस्त्वामाराध्यां हरिहरविरिञ्चादिभिरपि**
**प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति ॥**

इति। शिवस्य सृष्टिकरणसङ्कल्पात् रजोगुणनियामकः ब्रह्मा, सत्त्वगुणनियामकः विष्णुश्च उद्भवतः, नारायणः तस्य नाभिकमलादुद्भूतः ब्रह्मा च परमेश्वरस्य स्वरूपमेव। सृष्टिकरणे स एव ब्रह्मा, स्थितिकरणे स एव विष्णुः। ब्रह्मा ओंकारध्यानं कृतवान्। तेन सः सृष्टिकरणे समर्थः सञ्जातः तदा चतुर्दशभुवनानि, देवाश्च सृष्टाः। तदा विधाता सञ्चरन् शयानं नारायणं वीक्ष्य "पितः भवान् कः"? इति पृष्टवान्। तदा विष्णुः "पितः भवान् कः"? इति पृष्टवान्। तदा कः आदिपुरुषः इति विषये विवादः जातः। तदा स्व शक्तिं ज्ञातुं विधाता स्व ब्रह्मास्त्रं विष्णुः वैष्णवास्त्रञ्च प्रयोगं कृतवन्तौ। तदानीमकालप्रलयस्सञ्जातः देवाः तदा परंज्योतिं प्रार्थितवन्तः। तदा तयोर्मध्ये परंज्योतिः अग्निलिङ्गरूपेणाविर्भूतः। ततः ब्रह्मा तस्यादिं, विष्णुः तस्यान्तं ज्ञातुं हंस वराहरूपौ धृत्वा गतवन्तौ। बहोःकालात्परं विधाता एवं चिन्तयति यत् "यदि मूलं ज्ञातवानिति असत्यं वदामि तर्हि का हानिः?" इति तस्मिन्नेवसमये लिङ्गात्पतन्तं केतकीपुष्पं पृष्टवान् - त्वं ज्योतिर्लिङ्गस्य मूलं जानाति वा इति। तदा नाहं जानेत्युक्तम् पुष्पेण। अथापि मम कृते असत्यं साक्ष्यं वक्तुमागच्छत्विति पुष्पं सूचयित्वा, पुष्पेण सह विधाता विष्णोः सकाशं गतवान्। तदा ब्रह्मा विष्णुं प्रति" भवान् ज्योतिर्लिङ्गस्यान्तं दृष्टवान् वा? इति। विष्णुः नेत्युक्तवान्। ब्रह्मा तु मूलमहं दृष्टवानिति प्रोक्तवान् केतकी पुष्पमपि साक्ष्यमवदत्। तदा विष्णुः भवानेव विजयं प्राप्तवानित्यभिनन्दितवान्। तत्सर्वं श्रुत्वा परमेश्वरः अग्निस्तम्भात् रूपं धृत्वा बहिरागतवान्।

**शान्तं पद्मासनस्थं शशिधरमुकुटं पञ्चवक्त्रं त्रिनेत्रं**
**शूलं वज्रं च खड्गं परशुमपि वरं दक्षिणाङ्गे वहन्तम्।**
**नागं पाशं च घण्टां डमरुकसहितं चाङ्कुशं वामभागे**
**नानालङ्कारयुक्तं स्फटिकमणिनिभं पार्वतीशं नमामि॥**

एतादृशरूपेणागत्य परमेश्वरः ब्रह्माणं भवतः आराधनं न भवतीति, केतक्याः पूजार्थं विनियोगः न भवतीति शप्तवान्। ततः ब्रह्मणः उपरितनशिरमुत्पाटितवान्। तदारभ्य ब्रह्मा चतुर्मुखः जातः। एवं परमेश्वरः लिङ्गरूपेणाराध्यते। लिङ्गमित्युक्ते लीनं भक्तीति लयनात् इत्यर्थः। सर्वं तस्मिन्, सर्वेषु सः इति। यथा समुद्रः तरङ्गाः, विश्वं भूतानि इव। अनेन परमेश्वर एव विशिष्टः इति भावना न। वयं यं प्रार्थयामः तस्मिन् परमात्मनि सर्वाः शक्तयः भवन्तीति जानीमः। परमात्मा एक एवेति भावना तु प्रधाना।

॥सर्वं शिवार्पणमस्तु॥

तिरुमलतिरुपतिदेवस्थानानि

## प्रदर्शमान

सप्तगिरेरुपरि भवतां आदराभिमानम् अनन्य समान्यम् ति.ति.दे.
पाठकानां मध्ये वारधि इव विराजमान सप्तवर्ण आध्यात्मिक सचित्र मास पत्रिका

## सप्तगिरि पत्रिकायाः मूल्ये परिवर्तनम्।

भवतां गृहं प्रति एव श्रीनिवासस्य आगमनानुभूतिः

सप्तगिरि आध्यात्मिक सचित्र मासपत्रिकायाः कृते शुल्कं दत्वा

श्रीनिवासस्य अक्षरप्रसादं प्रतिमासम् अनुभूयन्तु

# सप्तगिरिः

## आध्यात्मिक सचित्र मास पत्रिका

(तेलुगु, तमिळं, कन्नडं, हिन्दी, आङ्गलं, संस्कृत भाषाः)

..... शुल्क विशेषाः .....

एक पत्रिका प्रतिः रू/- २०
वार्षिक ग्राहकत्वम् रू/- २४०
आजीविक ग्राहकत्वम् रू/- २४००
(१२ वर्ष पर्यन्तम् एव)

शुल्कस्य परिवर्तनं सेप्टम्बर्, २०२२ तः प्रारम्भः। नूतन ग्राहकानां कृते एव एतद् परिवर्तनं भवति।

सङ्केतः
प्रधान सम्पादकः, ति.ति.दे. प्राङ्गणम् मुद्रणा, के.टि.रोड् - तिरुपतिः - ५१७५०१.
दूरभाषा - ०८७७ - २२६४३६३, २२६४५४३, २२६४३५९

# कृपणस्य धनम्

- श्रीमति विजय भट्ट

कस्मिंश्चिद्ग्रामे कश्चन अधनः आसीत्। तस्य उद्योगः नासीत्। उद्योगं प्राप्तुं तेन कृताः समे प्रयत्नाः विफलाः जाताः। कार्यं विना कुतो वा धनप्राप्तिः? अतः उदरपोषणाय भिक्षाटनमेव गतिरभूत्। भिक्षाटनेनापि अधिकं धनं तेन न प्राप्तम्।

अन्ते एकस्मिन् दिने चिन्ताक्रान्तः सः - ''इतःपरं मम ईदृशेन जीवनेन किं प्रयोजनं जीविकामपि उपलब्धुन न शक्यते मया। किमर्थं जीवितः अस्मि?'' इति वदन् जीवने लुप्तोत्साहस्रोतः सन् आत्महत्यां कर्तुम् अटवीं प्रति अगच्छत्।

तत्र वृक्षस्य शाखां रज्वा बद्ध्वा पाशं कण्ठे संस्थाप्य अकूर्दयत्। तदा रज्जुबद्धशाखैव त्रुटन्ती तेन सह भूमौ पतिता। यत्र सः पतितवान् तत्र भूमौ किञ्चिद् गर्तः सञ्जातश्च। सः गर्तं दृष्ट्वा विस्मितो बभूव। किं स्यात् तत्र इति द्रष्टुकामेन कुतूहलातिशयेन तेन इतोऽपि अधिकं खातम्। अहो! हन्त भाग्यम्!! तत्र सुवर्णनाणकैः पूरितं घटमेकं दृष्ट्व सः जहर्ष। दैवेनेव अहमत्र प्रेषितः स्यामिति चिन्तयन् अनेकवारं देवं नत्वा घटेन सह गृहङ्गत्वा सुखेन जीवितुम् आरब्धवांश्च।

केषुचित् दिनेषु अतिक्रान्तेषु कश्चन धनिकः तद्वनम् आगतवान्। सः कृपणः। कदापि कस्मैचिदपि साहाय्यं न करोति स्म। धनसञ्चयनं तस्य व्यसनम् आसीत्। तेन कतिपयेभ्यः दिनेभ्यः पूर्वं सुवर्णनाणकैः पूरितं घटम् आनीय गर्ते रहसि संस्थाप्य भूम्याः समीकरणं कृतम्। आसीत्। परं अधुना गर्तः दृष्टः, पूर्ववत् न आसीत्। तत्र घटः नास्ति इति स्पष्टं दृश्यते स्म। तदनु द्युतमनाः धनिकः कुत्रापि अन्यत्र अहं घटं स्थापितवान् स्याम्' इति इतस्ततः अपश्यत्। कुत्रापि तेन स्थापितानि चिह्नानि न दृष्टानि। घटः केनापि नीतः इति तस्य मनसि अन्ते दृढः अभवत्।

आजीवनं कष्टेन सङ्ग्रहीतं धनं सर्वं नष्टम् इति धनिकः अतीव दुःखितः। सः विवशः सन् विलपन् तत्रैव उपाविशत्। तावता तस्य दृष्टिगोचरे अधनेन त्यक्तं पार्श्वस्थं पाशम् अपतत्। झटिति निराशतापूर्णायां मनःस्थितौ विवेकशून्यः भूत्वा स्वस्य कण्ठे तं पाशं संस्थाप्य प्राणान् अत्यजत्।

न देवाय न विप्राय न बन्धुभ्यो न चात्मने।
कृपणस्य धनं याति वह्नितस्करपार्थिवैः॥

चित्रकथा

# मार्कण्डेयः

तेलुगुमूलम् - श्री डी.श्रीनिवास दीक्षितुलु
चित्राणि - श्री श्री स्वामी
संस्कृतानुवादः - का. भास्करः
चरवाणी - ८१४३१५०८३३

मृकण्डु महर्षेः पत्नी मनस्विनी। तयोः दम्पत्योः बहुकालात् सन्तानं न जातम्। तौ दम्पत्यौ शिवं प्रति तपः आचरितौ। शिवः प्रत्यक्षो भूत्वा......

मृकण्डोः पुत्रः जातः। तस्य मार्कण्डेयः इति नामं दत्तवन्तः महर्षयः अशिषाः दत्तवन्तः।

एकस्मिन् दिने महर्षयः आगत्य मार्कण्डेयं प्रति एवम् अवदन्। ब्रह्मापि अवदत्।

मार्कण्डेयः निरन्तरं ध्यानं करोति।

आयुः जातम् इति यमभटाः मार्कण्डेयस्य सविधे आगताः।

शिवभक्तम् एतं बालकं स्पर्षणमपि कष्टमेव भाति।

सत्यम्। गत्वा यमराजस्य विषयं वदामः।

यमभटाः विषयं यमराजस्य निवेदितवन्तः। यमराजः स्वयम् आगत्य शिवस्य ध्याने मग्नः मार्कण्डेयस्य उपरि यमपाशं प्रयोगितवान्।

पाशस्य बद्धः न भवति बालकः?

परमेश्वर! पाहि मां पाहि

मार्कण्डेयः शिवलिङ्गालिङ्गनं कृत्वा

शिव! शङ्कर! मृत्युञ्जय रक्ष माम्।

शिवलिङ्गात् शिवः आविर्भूतः।

यम! मम भाक्तानां समीपं मा आगच्छ।

शिव! शरणम्। शरणम्।

अस्तु देव!

मार्कण्डेय! चिरञ्जीव!

मार्कण्डेय शिवस्य स्तुतिं कृतवान् (अकरोत्)।

हर हर महा देव शम्भो शङ्कर!

स्वस्ति



सर्वे जनाः सुखिनो भवन्तु

अस्य चित्रपटस्य रञ्जनं कुर्मः वा?

प्रदत्तं चित्रपटम् अधोनिर्दिष्टप्रदेशे स्थापयामो वा?

## बालविनोदिनी

## रसप्रश्नाः

१. भागवत्सस्य अपरं नाम किम्?

२.चतुश्लोकी भागवतं केन प्रोक्तम्?

३. जगद्गुरुः कः?

४.व्यासविरचित अष्टादश महा पुराणानाम्, उपपुराणानां मिलित्वा किं व्याहरन्ति?

५.व्यासविरचित महाभारतं कः विश्वव्याप्तं कृतवान्?

६.प्रणवनादः कः?

(समाधानानि - १. आध्यात्म दीपः २. नारायणेन ३. श्रीकृष्णः ४. पुराण संहिता ५. वैशम्पायनः ६. ॐ कारः)

१.पृष्टे देवालयः, २. पृष्टे पद्मम् ३. अधः पिकः ४. पृष्ठे नारिकेळ वृक्षाः ५. दक्षिणे कलहंसकः ६. पृष्टे उपरि आम्र फलानि ७. अधः गुल्मानि।

ऐदंप्राथम्येन सप्तगिरिमासपत्रिकायां लघुप्रश्नोत्तरी इति स्पर्धाकार्यक्रमः आयोजितः यत्र एतन्मासीयपत्रिकायां प्रकटितविषयाधारिताः प्रश्नाः भवेयुः। अतः हे बालबालिकाः! प्रतिमासं इमां पत्रिकां पठित्वा उत्तरदानप्रक्रियायां सक्रियं भागं वहन्ति खलु!

# लघुप्रश्नोत्तरी

१. भागवते कति श्लोकाः सन्ति?
२. भक्ति मातुः सन्तती कौ?
३. मुक्तिकान्ता कस्याः दासी?
४. यदा कलिः प्रविशति तदा मुक्तिः कुत्र गच्छति?
५. कलियुगे के नश्यन्ति?
६. भागवते आत्मदेवः कः?
७. स्वयं चैतन्य स्वरूपः सर्वेषां निवसितः कः?
८. वेदभूमिः इति कस्याः नाम?
९. सर्वव्यापकः कः?
१०. प्रथम महामुनिः कः?
११. शिवं नाम कः?
१२. वेदस्य अन्तः कः?
१३. शौनकादि मुनयः कस्य यागं कृतवन्तः?
१४. शौनकादि मुनयः सत्रयागं कुत्र कृतवन्तः?
१५. शाश्वतः कः?

| समाधानानि |
|---|
| १. |
| २. |
| ३. |
| ४. |
| ५. |
| ६. |
| ७. |
| ८. |
| ९. |
| १०. |
| ११. |
| १२. |
| १३. |
| १४. |
| १५. |

## नियमावालिः

१. केवलं १० तः १५ वर्षीयाः बालाः हैन्दवाः अत्र भागं ग्रहीतुमर्हन्ति।
२. बालाः पत्रिकापुटे प्रदत्तस्थले समानभाषायाम् एव उत्तरं विलिख्य तत्पत्रं The Chief Editor Office, Sapthagiri, T.T.D. Press Compound, K.T.Road, Tirupati 517507, प्रति २५ दिनाङ्कात् पूर्वं प्रेषयेयुः। प्रतिकृतीः (Xerox) नैव स्वीक्रियन्ते।
३. बालानां पितरौ मासपत्रिकाग्रहीतारः (Subsribers) भवेयुः। तत्र नाम, सङ्केतः, दूरवाणीसङ्ख्या च उत्तरपत्रिकायां देया एव।
४. समाधानेषु त्रुटयः, समीकरणानि च न भवेयुः।
५. सर्वेषां प्रश्नानां समीचीनसमाधानं दत्तानां त्रयाणां बालानां चयनं DIP द्वारा क्रियते।
६. विजेतॄणां नामानि अग्रिममासीय सप्तगिरि पत्रिकायां प्रचुरितानि भवन्ति।
७. Chief Editor कार्यालयीयकार्यकर्तृपुत्रपत्रिकानां च अत्र अवकाशो नास्ति।
८. अस्य कार्यक्रमस्य समाचारः दूरवाणीद्वारा नैव दीयते।

Subscription Number :
Name :
Mother :
Father :
Address :
Phone Number :

Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road,Tirupati 517 507.
Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.

०१.०१.२०२३ तः ०५.०१.२०२३ पर्यन्तम्

तिरुपतिस्थ

**श्रीकपिलेश्वरस्वामिनः**
**प्लवोत्सव दृश्यानि**

तोन्डमानुपुरम्
**श्रीदेवी, भूदेवी, श्रीवेङ्कटेश्वरस्वामिनः**
**ब्रह्मोत्सवः**
**२०२३ फिब्रवरि २० तः २८ पर्यन्तम्**

तिरुमलतिरुपतिदेवस्थानानि

**२०-०२-२०२३, इन्दुवासरः**
प्रातः - ध्वजारोहणम्
रात्रौ - शेषवाहनम्

**२१-०२-२०२३, भौमवासरः**
रात्रौ - हंसवाहनम्

**२२-०२-२०२३, सौम्यवासरः**
रात्रौ - सिंहवाहनम्

**२६-०२-२०२३, बृहस्पतिवासरः**
प्रातः - हनुमद्वाहनम्,

**२४-०२-२०२३, भृगुवासरः**
रात्रौ - गरुडवाहनम्

**२५-०२-२०२३, मन्दवासरः**
सायम् - कल्याणोत्सवः
रात्रौ - गजवाहनम्

**२६-०२-२०२३, भानुवासरः**
रात्रौ - चन्द्रप्रभवाहनम्

**२७-०२-२०२३, इन्दुवासरः**
प्रातः - तिरुच्चि (रथोत्सवः)
रात्रौ - अश्ववाहनम्

**२८-०२-२०२३, भौमवासरः**
प्रातः - चक्रस्नानम्
रात्रौ - ध्वजावरोहणम्